THE

# SISUPALAVADHA

OF

## MĀGHA

WITH

The Commentary (Sarvankashā) of **Mallinātha.**

EDITED BY

PANDIT DURGĀPRASĀDA

AND

PANDIT S'IVADATTA

OF JAYPORE.

Tenth Edition.

REVISED BY

WĀSUDEV LAXMAṆ S'ASTRĪ PAṆS'IKAR.

PUBLISHED BY

PĀNDURANG JĀWAJĪ,

PROPRIETOR OF THE "NIRṆAYA SAGAR" PRESS,

BOMBAY.

1933.

*Price 2½ Rupees.*

श्रीः ।

श्रीदत्तकसूनुमहाकविश्रीमाघप्रणीतं

# शिशुपालवधम् ।

## महामहोपाध्यायकोलाचलमल्लिनाथसूरिकृतया सर्वंकषाख्यया व्याख्यया समुल्लसितम् ।

---

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना

**पण्डितदुर्गाप्रसादेन**

लवपुरीयराजकीयपाठशालाप्रधानाध्यापकेन

महामहोपाध्यायदाधीचपण्डितशिवदत्तेन च

संशोधितम् ।

तस्येदं

दशमं संस्करणं

पणशीकरोपाह्वविद्वद्वरलक्ष्मणशर्मतनुजनुषा

वासुदेवशास्त्रिणा

संस्कृतम् ।

---

तच्च

शाके १८५४, सन १९३३ वत्सरे

मुम्बय्यां

पाण्डुरङ्ग जावजी श्रेष्ठिना

स्वीये निर्णयसागराख्यमुद्रणयन्त्रालयेऽङ्कयित्वा प्रकाशितम् ।

मूल्यं २॥ सार्धरूप्यकद्वयम् ।

# उपोद्घातः।

इह खलु निखिलेऽपि भारते वर्षे महाकविपदवीमारुरुक्षुभिश्छात्रैः सत्स्वपि हरविजयादिषु परःशतेषु काव्यरत्नेषु लघुत्रयीति नाम्ना प्रसिद्धं कालिदासप्रणीतं काव्यत्रयं, बृहत्त्रयीति नाम्ना प्रथितं किरातार्जुनीयं शिशुपालवधं नैषधीयचरितं चेति काव्यत्रयमेवाहरहः क्रमेणाभ्यस्यते सर्वत्र। तत्र बृहत्त्रय्यां निखिलमहाकाव्यलक्षणाक्रान्ततयातिप्रसन्नगम्भीरतयात्युपयुक्तव्याकरणप्रयोगप्राचुर्येणातिव्युत्पादकतया च कविमूर्धन्य-माघप्रणीतं शिशुपालवधकाव्यमेव नायकायते।

तस्य च प्रणेता दत्तकसूनुर्माघकविः कस्मिन्समये कतमं जनपदं जन्मना भूषयांचकारेति विचारः प्रस्तूयते—तत्र तावद्बल्लालपण्डितसंकलिते **भोजप्रबन्धे**—"ततोऽन्यदा राजनि सिंहासनासीने श्रीभोजे द्वाःस्थः प्रणम्य राजानं प्राह—'राजन्, गुर्जरदेशादागत्य माघनामा पण्डितवरो दुर्भिक्षेणातिविडम्बितो देवस्य नगराद्बहिस्तिष्ठति। तेन च दारिद्र्यविडम्बितेन पण्डितेन स्वपत्नी प्रेषिता। सा च भवनद्वारि वर्तते'। राजा—'प्रवेशय'। ततो माघपण्डितस्य पत्नी प्रविश्य राज्ञे पत्रं प्रयच्छति। राजा तदादाय वाचयति—'कुमुदवनमपश्रि श्रीमदम्भोजषण्डं त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः। उदयमहिमरश्मिर्याति शीतांशुरस्तं हतविधिलसितानां ही विचित्रो विपाकः॥' (शिशुपालवधे ११।६४) राजा तदद्भुतगुणं प्रभातवर्णनमाकर्ण्य लक्षत्रयं दत्त्वा माघपत्नीं प्रति प्राह—'मातः, इदं मया भोजनाय दीयते। प्रातरहं माघपण्डितं नमस्कर्तुमागमिष्यामि'। ततः सा माघपत्नी तदादाय स्वस्थानमागच्छन्ती याचकव्रातात्स्वभर्तुः शारदचन्द्रकिरणगौरान्गुणाञ्श्रुत्वा तेभ्यो याचकेभ्यो निखिलमपि धारेन्द्रदत्तं वित्तं दत्तवती। दत्त्वा च माघपण्डितं प्राह—'नाथ, राज्ञा भोजेनाहं बहुमानिता, धनं चातिभूरि दत्तम्। मया च मार्गे आयान्त्या याचकमुखेभ्यो लोकोत्तरांस्तांस्तांस्तव गुणानाकर्ण्य तन्निखिलमपि वित्तं याचकेभ्यो दत्तम्'। माघः प्राह—'देवि, साधु कृतम्। परमन्ये याचका आयान्ति तेभ्यः किं दातव्यम्। ततो माघपण्डितं वस्त्रावशेषं विदित्वा कोऽप्यर्थी प्राह—'आश्वास्य पर्वतकुलं तपनोष्मतप्तमुद्दामदावविधुराणि च काननानि। नानानदीनदशतानि च पूरयित्वा रिक्तोऽसि यज्जलद सैव तवोत्तमा श्रीः॥' ततो माघः पत्नीं प्राह—'अर्था न सन्ति न च मुञ्चति मां दुराशा त्यागान्न संकुचति दुर्ललितं मनो मे। याच्ञा च लाघवकरी स्ववधे च पापं प्राणाः स्वयं व्रजत किं नु विलम्बितेन॥ दारिद्र्यानलसंतापः शान्तः संतोषवारिणा। याचकाशाविघातान्तर्दाहः केनोपशाम्यति॥' देवि, किं बहुना। चित्ते कष्टं किमपि नास्ति। परं व्यथाप्युच्यते—'न भिक्षा दुर्भिक्षे पतति दुरवस्थाः कथमृणं लभन्ते कर्माणि द्विजपरिवृढान्कारयति कः। अदत्त्वैव ग्रासं ग्रहपतिरसावस्तमयते क्व यामः किं कुर्मो गृहिणि बहुनो जीवनविधिः॥' ततस्तथाविधामवस्थां माघस्य विलोक्य सर्वे

---

१ सुभाषितावली भट्टप्रद्युम्ननाम्ना समुद्धृतोऽयं श्लोकः.

याचका यथास्थानमगुः । याचकेषु यथास्थानं गच्छत्सु माघः प्राह—'व्रजत व्रजत प्राणा अर्थिनि व्यर्थतां गते । पश्चादपि हि गन्तव्यं क्व सार्थः पुनरीदृशः ॥' ततो माघपत्नी स्वामिनि परलोकं प्राप्ते प्राह—'सेवन्ते स्म गृहं यस्य दासवद्भूभुजः पुरा । हाय भार्यासहायोऽयं मृतो वै माघपण्डितः ॥' ततो राजा माघपण्डितं विपन्नं विदित्वा निजनगराद्ब्राह्मणशतावृतो मौनी पद्भ्यामेव तत्रागात् । ततो माघपत्नी राजानं वीक्ष्य प्राह—'राजन्, यदि पण्डितस्तव देशं प्राप्तस्तर्हि गृहमेव प्राप्तः । ततो देवेन कार्यशेषं सम्यक्संपादनीयम् ।' राजा तं विपन्नं माघपण्डितं नर्मदातीरं प्रापयामास । सा च माघपत्नी तेन सह वह्निप्रवेशं कृतवती । ततो राजा माघस्योत्तरक्रियां पुत्र इव चक्रे । ततो दिवं गते माघे राजा शोकाकुलो विशेषेण कालिदासविरहेण तथा सकलविद्वत्प्रवसनेन च दिने दिने कार्श्येन प्रतिपच्चन्द्राकृतिरासीत् ।" अयं प्रबन्धः समुपलभ्यते ।

जैनमेरुतुङ्गाचार्येण १३६१ संवत्सरे प्रणीते प्रबन्धचिन्तामणौ च—"अथ श्रीभोजः श्रीमाघपण्डितविद्वत्तां पुण्यवत्तां च सततमाकर्ण्य तद्दर्शनोत्सुकतया राजादेशैः सततं प्रेष्यमाणैः श्रीमालनगराद्धिमसमये समानीय सबहुमानं भोजनादिभिः सत्कृत्य तदनु राजोचितान्विनोदान्दर्शयन् रात्रावारात्रिकावसरानन्तरं संनिहिते स्वसंनिभे पल्यङ्के माघपण्डितं नियोज्य तस्मै स्वशीतरक्षामुपनीय प्रियालापांश्चिरं कुर्वाणः सुखं सुष्वाप । प्रातर्माङ्गल्यतुर्यघोषैर्विनिद्रं नृपं स्वस्थानगमनाय माघपण्डित आपृष्टवान् । विस्मयापन्नहृदयेन राज्ञा दिने भोजनाच्छादनादिसुखं पृष्टः स कदन्नसदन्नवार्ताभिरलं शीतभारेण श्रान्तं विज्ञपयन्खिद्यमानेन राज्ञा कथंकथंचिदनुज्ञातः पुरोपवनं यावद्भूभुजानुगम्यमानो माघपण्डितेन स्वागमनप्रसादेन संभावनीयोऽहमिति विज्ञप्तो नृपानुज्ञातः स्व पदं भेजे । तदनु कतिपयदिनैः श्रीभोजस्तद्विभवभोगसामग्रीदिदृक्षया श्रीमालनगरं प्राप्तः । माघपण्डितेन प्रत्युद्गमादियथोचितभक्त्यावर्जितःससैन्यस्तन्मन्दुरायां ममौ । स्वयं तु माघपण्डितस्य सौधमध्यास्य संचारकभुवं काचनबद्धामवलोक्य स्नानादनु देवतावसथोर्व्यां मणिमरकतकुट्टिमशैवलवल्लरीयुग्जलभ्रान्त्या धौताम्बरीयं संवृण्वन् सौवस्तिकेन ज्ञापितवृत्तान्तस्तदंत्र तद्देवतार्चानन्तरं निवृत्ते मन्त्रावसरे अशनसमयमागतां रसवतीमास्वादयन्नाकालिकैर्देशजैर्व्यञ्जनैः फलादिभिश्चित्रीयमाणमानसः संस्कृतपयःशालिशालिनीं रसवतीमाकण्ठमुपभुज्य भोजनान्ते चन्द्रशालामधिरुह्याश्रुतादृष्टापूर्वकाव्यकथाप्रबन्धप्रेक्ष्यादीनि प्रेक्षमाणः शिशिरसमयेऽपि संजाताकस्मिकग्रीष्मभ्रान्त्या संवीतसितस्वच्छवसनस्तालवृन्तकरैरनुचरैर्वीज्यमानोऽमन्दचन्दनालेपनेपथ्यः सुखनिद्रया तां क्षणदां क्षणमिवातिवाह्य प्रत्यूषे शकुनिःस्वनाद्विगतनिद्रो हिमसमये ग्रीष्मावतारव्यतिकरो माघपण्डितेन ज्ञापित इति प्रतिसमयं सविस्मयः कति दिनान्यवस्थाय स्वदेशगमनायापृच्छत् । स्वयं करिष्यमाणनव्यभोजस्वामिप्रसादप्रदत्तपुण्यो मालवमण्डलं प्रति प्रतस्थे । तथा निजजन्मदिने जनकेन नैमित्तिकाजातके कार्यमाणे 'पूर्वमुदितोदितसमृद्धिर्भूत्वा प्रान्ते गलितविभवः किंचिच्चरणयो-

राविर्भूतश्वयथुविकारः पञ्चत्वमाप्स्यति' इति निमित्तविदा निवेदितां विभवसंभारेण तां ग्रहगतिं निराचिकीर्षुणा माघपित्रा संवत्सरशतप्रमाणे मनुजायुषि षट्त्रिंशत्सहस्राणि दिनानि भविष्यन्तीति विमृश्य नाणकपरिपूर्णास्तावत्संख्याकान्हारकान्कारितनव्यकोषेषु निवेश्य तदधिकां परां भूतिं शतशः समर्प्य प्रदत्तमाघनाम्ने सुताय कुलोचितां शिक्षां वितीर्य कृतकृत्यमानिना तेन विपेदे । तदनन्तरमुत्तराशापतिरिव प्राज्यसाम्राज्यो विद्वज्जनेभ्यः श्रियं तदिच्छया यच्छन्नमानैर्दानैरर्थिसार्थं कृतार्थयंस्तैर्भोगविधिभिः स्वममानुषावतारमिव दर्शयन् विरचितशिशुपालवधाभिधानमहाकाव्यचमत्कृतविद्वज्जनः स प्रान्ते पुण्यक्षयात्क्षीणवित्तो विपत्तिपात स्वविषये स्थातुमप्रभूष्णुः सकलत्रो मालवमण्डले गत्वा धारायां कृतावासः पुस्तकग्रहणकार्पणपूर्वकं श्रीभोजात्कियदपि द्रव्यमानेयमिति तत्र पत्नीं प्रस्थाप्य यावत्तदाशया माघपण्डितश्चिरं तस्थौ तावत्तथावस्थां श्रीभोजस्तत्पत्नीं विलोक्य ससंभ्रमः शलाकान्यासेन तत्पुस्तकमुन्मुद्र्य काव्यमद्राक्षीत् । 'कुमुदवनमपश्रि—'( भोजप्रबन्धस्थ एव श्लोक. ) । अथ काव्यार्थमवगम्य का कथा गन्धस्य, केवलमस्यत्र काव्यस्य विश्वंभरा मूल्यमल्पम् । समयोचितस्यानुच्छिष्टस्य ह्रीशब्दस्य पारितोषिके क्षितिपतिलक्षद्रव्यं वितीर्य तां विससर्ज । सापि ततः संचरन्ती विदितमाघपण्डितपत्नी कैश्चिद्भिरर्थिभिर्याच्यमाना तत्पारितोषिकं तेभ्यः समस्तमपि वितीर्य यथावस्थिता गृहमुपेयुषी । तद्वृत्तान्तं विज्ञापनापूर्वं किंचिच्चरणस्फुरितशोकाय पत्ये निवेदयामास । अथ त्वमेव मे शरीरिणी कीर्तिरिति श्लाघमानस्तदा स्वगृहमागतं कमपि भिक्षुं वीक्ष्य भवने तदुचितं किमपि देयमपश्यन् संजातनिर्वेद इदमवादीत्—'अर्था न सन्ति न च–॥१॥ दारिद्र्यानल–॥ २ ॥ व्रजत व्रजत–॥ ३ ॥ न भिक्षा दुर्भिक्षे–॥ ४ ॥ ( श्लोकचतुष्टयं भोजप्रबन्धवत् )– क्षुत्क्षामः पथिको मदीयभवनं पृच्छन्कुतोऽप्यागतस्तत्किं गेहिनि किंचिदस्ति यदयं भुङ्क्ते बुभुक्षातुरः । वाचास्त्यभिधाय नास्ति च पुनः प्रोक्तं विनेवाक्षरैः स्थूलस्थूलविलोललोचनजलैर्बाष्पाम्भसां बिन्दुभि. ॥ ५ ॥ इति तद्वाक्यान्त एव स माघपण्डितः पञ्चत्वमवाप । प्रातस्तं वृत्तान्तमवगम्य श्रीभोजेन श्रीमालेषु तज्ज्ञातिषु धनवत्सु सत्सु तस्मिन्पुरुषरत्ने विनष्टे क्षुधाबाधिते सति भिल्लमाल इति तज्ज्ञातेर्नाम निर्ममे ॥" अयं प्रबन्धो वर्तते ॥—

श्रीप्रभाचन्द्रेण १३३४ मिते विक्रमाब्दे प्रणीते प्रद्युम्नसूरिसंशोधिते प्रभावकचरिते चतुर्दशे शृङ्गे—

"श्रीसिद्धर्षिः श्रियो देयाद्विद्याध्यामयधामभूः (?) ।
निर्ग्रन्थग्रन्थतामापुर्यद्ग्रन्थाः सांप्रतं भुवि ॥ १ ॥

---

१ सुरतनगरस्य शेठ भगवानदास केवलदासजीनाम्ना मन्मित्रेण प्रहिते १८२७ मिते विक्रमाब्दे लिखिते शिशुपालवधपुस्तके समाप्तौ 'इति श्रीभिन्नमालववास्तव्यदत्तकसूनोर्महावैयाकरणस्य माघस्य कृतौ शिशुपालवधे–' इत्याद्यस्ति. स च भिन्नमालवनामा ग्रामोऽधुना 'भिनमाला' इति नाम्ना ख्यातो गुजरात–मारवाडदेशयोः सीमायां वर्तत इति केचिद्वदन्ति.

श्रीसिद्धर्षिप्रभोः पान्तु वाचः परिपचेलिमाः ।
अनाद्यविद्यासंस्कारा यदुपास्तेर्भिदेलिमाः ॥ २ ॥
**सुप्रभः** पूर्वजो यस्य सुप्रभः प्रतिभावताम् ।
बन्धुर्बन्धुरभाग्यस्य यस्य **माघः** कवीश्वरः ॥ ३ ॥
चरितं कीर्तयिष्यामि तस्य त्रस्यज्जडाशयम् ।
भूभृच्चक्रचमत्कारि वारिताखिलकल्मषम् ॥ ४ ॥
अजर्जरश्रियां धाम वेषालक्ष्यजरज्जरः (?) ।
अस्ति **गुर्जरदेशो**ऽन्यसज्जराजन्यदुर्जरः ॥ ५ ॥
तत्र **श्रीमाल**मित्यस्ति पुरं मुखमिव क्षितेः ।
चैत्योपरिस्थकुम्भालिर्यत्र चूडामणीयते ॥ ६ ॥
प्रासादा यत्र दृश्यन्ते मत्तवारणराजिताः ।
राजमार्गाश्च शोभन्ते मत्तवारणराजिताः ॥ ७ ॥
जैनालयाश्च सन्त्यत्र नवं धूपगमं श्रिताः ।
महर्षयश्च निःसङ्गा न बन्धूपगमं (?) श्रिताः ॥ ८ ॥
तत्रास्ति हास्तिकाश्वीयापहस्तितरिपुव्रजः ।
नृपः **श्रीवर्मलाता**ख्यः शत्रुमर्मभिदाक्षमः ॥ ९ ॥
तस्य **सुप्रभदेवो**ऽस्ति मन्त्री मितमपाः किल ।
तस्य पुत्रावुभावंसाविव विश्वंभरक्षमौ ॥ १० ॥
आद्यो **दत्तः** स्फुरद्वृत्तो द्वितीयश्च **शुभंकरः** ।
दत्तवित्तोऽनुजीविभ्यो दत्त[ः] चित्तमुधर्मधीः (?) ॥ ११ ॥
तस्य[1] **श्रीभोजभूपाल**बालमित्रं कवीश्वरः ।
**श्रीमाघो** नन्दनो ब्राह्मीस्यन्दनः शीलचन्दनः ॥ १२ ॥
ऐदंयुगीनलोकस्य सारसारस्वतायितम् ।
**शिशुपालवधं** काव्यं प्रशस्तिर्यस्य शाश्वती ॥ १३ ॥
**श्रीमाघो**ऽस्ताघधीः श्लाघ्यः प्रशस्यः कस्य नाभवत् ।
चित्तजाड्यहरा यस्य काव्यगङ्गोर्मिविप्रुषः ॥ १४ ॥
तथा **शुभंकरः** श्रेष्ठी विश्वविश्वप्रियंकरः ।
यस्य दानाद्भुतंर्गीतैर्हर्यश्वो हर्षभूरभूत् ॥ १५ ॥
तस्याभूद्गेहिनी लक्ष्मीर्लक्ष्मीर्लक्ष्मीपतेरिव ।
यया सत्यापिता सत्यासीताद्या विश्वविश्रुताः ॥ १६ ॥
नन्दनो नन्दनोत्तंसः कल्पद्रुम इवापरः ।
यथेच्छादानतोऽर्थिभ्यः प्रथितः **सिद्ध**नामतः ॥ १७ ॥"

इत्यादि,

---

१ दत्तकस्य.

"इत्थमुद्वेजितस्वान्तस्तेनासौ निर्ममे बुधः ।
अन्यदुर्बोधसंबद्धां प्रस्तावाष्टकसंभृताम् ॥९५॥
रम्यामुपमितिभवप्रपञ्चाख्यां महाकथाम् ।
सुबोधकवितां विद्वदुत्तमाङ्गविधूननीम् ॥ ९६ ॥" युग्मम् ॥

इत्यादि च सिद्धर्षिचरितं वर्तते ।

चरितान्ते च—

"श्रीमत्सुप्रभदेवनिर्मलकुलालंकारचूडामणिः
श्रीमन्माघकवीश्वरस्य सहजः प्रेक्षापरीक्षानिधिः ।
तद्वृत्तं परिचिन्त्य कुग्रहपरिष्वङ्गं कथंचित्कलि-
प्रागल्भ्यादपि संगतं त्यजत भो लोकद्वये शुद्धये ॥ १५५ ॥"

इति पद्यमस्ति ।

एतत्प्रबन्धत्रयविलोकनेन शिशुपालवधकाव्यकर्ता माघकविः ख्रिस्ताब्दीयैकादशशतकोत्तरार्धे मालवदेशं शासतो धारानगराधिपतेः श्रीभोजदेवस्य समकालीन आसीदिति प्रतीयते । परमेतादृशे समयनिर्णयादिव्यतिकरे भोजप्रबन्धप्रबन्धचिन्तामणिप्रभावकचरितादयो न श्रद्धापथमध्यासते । यतस्तत्रातिप्रतीतेषु बहुभिर्निर्णीतेषु विषयेष्वपि भूयान्विपर्ययः समुपलभ्यते ॥

माघकविस्तु ख्रिस्ताब्दीयनवमशतकात्कथमपि नार्वाचीनः । यतः कश्मीरेषु नवमशतकोत्तरभागे वर्तमानः श्रीमदानन्दवर्धनाचार्यो ध्वन्यालोकस्य द्वितीयोद्द्योते—

---

१ असौ सिद्धः. २ उपमितिभवप्रपञ्चकथासमाप्तौ (९६२) मितो ग्रन्थनिर्माणसंवत्सरो लिखितः. एतदेवावलम्ब्य शार्मण्यदेशवासी क्लाटपण्डितः (Dr. F. Klatt) माघकवेरपि सत्तां ख्रिस्ताब्दीयदशमशतकारम्भे स्थिरीकरोति । तद्देशीयो जेकोबीपण्डितस्तु (Prof. Jacobi) 'We therefore cannot place Magha later than about the middle of the Sixth century' इति वदन्ख्रिस्ताब्दीयषष्ठशतकमध्यभागान्नार्वाचीनो माघकविरिति निश्चिनोति. याकोबीमतमेव ममापि संमतम्. यतः प्रभावकचरितमपहायान्यत्र माघस्य शुभंकरः पितृव्य आसीत्सिद्धश्च पितृव्यपुत्र इत्यादि नोपलब्धम्. केवलमियं किंवदन्त्येव. प्रभावकचरितं च जनश्रुत्याधारेण निर्मितमिति ग्रन्थारम्भे—'बहुश्रुतमुनीशेभ्यः प्राग्ग्रन्थेभ्यश्च कानिचित् । उपश्रुत्येतिवृत्तानि वर्णयिष्ये कियन्त्यपि ॥' इति ग्रन्थकृत्स्वयमेव वदति. अथ च तारानाथतर्कवाचस्पतिना वाचस्पत्ये कोषे माघपदव्याख्याने 'तावद्भा भारवेर्भाति यावन्माघस्य नोदय इत्युद्भटः' इति लिखितमस्ति, तत्र क्लाटपण्डितः 'अयं श्लोकः क्वचिदप्युद्भटग्रन्थे नोपलभ्यत' इति तारानाथमाक्षिपति. किंतूद्भटपदेन कश्मीरदेशप्रसिद्धो जयापीडसभापतिर्भट्टोद्भटस्तारानाथस्य न विवक्षितः, तेन तु ग्रन्थबहिर्भूतोऽज्ञातकर्तृनामकः श्लोक एवोद्भटपदेन व्यवह्रियते. तथा च तदीये वाचस्पत्य एव उद्भटपदव्याख्याने 'ग्रन्थबहिर्भूते लोकप्रसिद्धेऽज्ञातकर्तृके श्लोके' इति तदीयं व्याख्यानमस्ति. एतत्सर्वं पर्यालोच्य शर्मवता शार्मण्यपण्डितेन संतोष्टव्यम्.

'आसाकुलः परिपतन्–' (५।२६) ( काव्यमालायां मुद्रितस्य ११४ पृष्ठे ) इत्यादिपद्यम् ,– 'रम्या इति प्राप्तवतीः–' ( ३।५३ ) (काव्यमालायां मुद्रितस्य ११५पृष्ठे )इत्यादिपद्यं च शिशुपालवधादुदाहृतवान् ; अथ च शिशुपालवधे ( २।११२ ) माघो न्यासग्रन्थं स्मरतीति न्यासप्रणेतुर्जिनेन्द्रबुद्धपादाचार्यादधस्तनः ।

गुर्जरदेशोद्भवोऽयं कविरिति पूर्वोद्धृतप्रबन्धेभ्यो लोकप्रथातश्च प्रतीयते । ग्रन्थान्ते च स्ववंशवर्णने माघकविना स्वपितामहस्य सुप्रभदेवस्याश्रयभूतः कश्चन तत्कालीनो महीपतिरपि वर्णितो यः प्रभावकचरितेऽपि स्मृतः तत्र शिशुपालवधपुस्तकेषु धर्मनाभ, धर्मनाथ, धर्मलाभ, चर्मलाथ, घर्मलाथ, धर्मदेव, वर्मलाख्य, वर्मलात, वर्मनाभ, निर्मालान्त, इति तन्नाम्नि नानाविधः पाठो दृश्यते । अतस्तद्विषये जोषमेव स्थातुमीहे । शिशुपालवधादन्यः कोऽपि ग्रन्थोऽस्य कवेर्नोपलब्धः । किंतु सुभाषितावलौ 'शीलं शैलतटात्पतत्वभिजनः संदह्यतां वह्निना माश्रौषं जगति श्रुतस्य विफलक्लेशस्य नामाप्यहम् । शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु मे सर्वदा येनैकेन विना गुणास्तृणबुसप्रायाः समस्ता अमी ॥' 'नारीनितम्बफलके प्रतिबध्यमाना हंसीव हेमरशना मधुरं ररास । तन्मोचनार्थमिव नूपुरराजहंसाश्चक्रन्दुरार्तमुखरं चरणावलग्नाः ॥' एतच्छ्लोकद्वयं शिशुपालवधेऽनुपलभ्यमानं वल्लभदेवेन. औचित्यविचारचर्चायां च 'बुभुक्षितैर्व्याकरणं न भुज्यते पिपासितैः काव्यरसो न पीयते । न विद्यया केनचिदुद्धृतं कुलं हिरण्यमेवार्जय निष्फलाः कलाः ॥' एतत्पद्यं तादृशमेव क्षेमेन्द्रेण माघनाम्ना समुद्धृतमस्तीत्यस्ति कश्चिदन्योऽपि ग्रन्थो माघकृत इत्यनुमीयते ।

काव्यस्यास्याद्यावधि ज्ञाताष्टीकाः,–( १ ) वल्लभदेवकृता संदेहविषौषधाख्या,( २ ) रङ्गराजकृता, ( ३ ) एकनाथकृता, ( ४ ) चरित्रवर्धनकृता, ( ५ ) मल्लिनाथकृता सर्वंकषा, ( ६ ) भरतमल्लिककृता सुबोधा, ( ७ ) दिनकरमिश्रकृता सुबोधिनी , ( ८ ) गोपालकृता हसन्ती , एता अष्टौ सन्ति । एतासु मल्लिनाथकृता सर्वंकषैव सर्वाङ्गपरिपूर्णा कैश्मीरदेशमपहायान्यत्र सर्वत्र लब्धप्रचारा विद्वद्भिरादृता च वर्तते । मल्लिनाथपण्डितश्चान्ध्रदेशे ख्रिस्ताब्दीयचतुर्दशशतक आसीदिति नवीनविदुषां निर्णयः ।

सर्वंकषासमेतमेतत्काव्यं कलिकाताकाश्यादिषु बहुशो मुद्रितमपि सर्वाङ्गपूर्णतां दर्शनीयतां च न गतमिति पुनर्मुद्रणे मुख्यो हेतुः । तत्र १७६९ मिते शकाब्दे कलिकातानगरे श्रीतारानाथतर्कवाचस्पतिभट्टाचार्यादिविद्वद्वरैः संशोध्य मुद्रितं पुस्तकमादाय पुनरपि प्राचीनेन हस्तलिखितेन सर्वंकषापुस्तकेन संवाद्य तदाधारेणैतन्मुद्रणमकारि । अत्र च विंशसर्गान्ते सर्वेषु मुद्रितपुस्तकेषु प्रायो हस्तलिखितेष्वपि दुर्लभा श्लोकद्वयस्य सर्वंकषा, तदग्रे कविवंशवर्णनात्मकश्लोकपञ्चकस्य, पञ्चदशे सर्गे 'प्रक्षिप्ता एते' इति मन्यमानेन मल्लिनाथेनाव्याख्यातानां चतुस्त्रिंशच्छ्लोकानां च वल्लभदेवकृता टीका भूयसा यत्नेन संपाद्य यथास्थानं निवेशिता । मन्मित्रराजगुरुपर्वणीकरोपाह्वनारायणभट्टानां संग्रहादुपलब्धात् १२९९ मिते शकाब्दे लिखितान्मूलशिशुपालवधपुस्तकादुपयुक्तानि

१ अयं श्लोको भर्तृहरेर्नीतिशतकेऽप्युपलभ्यते. २ काश्मीरकैस्तु वल्लभदेवकृतटीकैवोपयुज्यते.

पाठान्तराणि च क्वचिद्दत्तानि । ग्रन्थान्ते चैकोनविंशसर्गस्थगोमूत्रिकामुरजचक्रबन्धादिश्लोकानां चित्राणि, टीकायां मल्लिनाथेनोद्धृतानां ग्रन्थग्रन्थकर्तॄणां तत्तत्स्थलोल्लेखपूर्वकं नाममालां, ग्रन्थस्थनिखिलश्लोकानामकारादिवर्णक्रमेणानुक्रमणीं च न्यस्तवानस्मि । शोधनसमये च जयपुरराजकीयपाठशालायां व्याकरणाध्यापकः पण्डितशिवदत्तशर्मा दाधीचः कतिपयस्थलेषु प्रायो व्याकरणविषयकं टिप्पणमुट्टङ्कितवान्, कृतवांश्च शोधनेऽपि सत्साहाय्यं तत्तदुपकारं मुहुः स्मरामि ।

एवमेतद्ग्रन्थमुद्रणे प्रयत्नमास्थितस्यापि मम मतिमान्द्याद्दृष्टिदोषात्प्रमादाद्वा समुत्पन्नाननल्पानप्यवद्यानुपेक्ष्य काव्यगुणगौरवेणैव गुणैकपक्षपातिनो निर्मत्सरा विद्वांसस्तोषमेष्यन्ति, भविष्यन्ति च परमेश्वरानुग्रहात्सफलसमीहिता इति भृशमाशास्ते

विदुषामनुचरो

**दुर्गाप्रसादः ।**

जयपुरराजधानी ।

प्रथम अधिक भाद्रशुक्ल ५ संवत् १९४७.

# विषयानुक्रमणी ।


| सर्गाङ्कः । | विषयः । |
|---|---|
| १ | द्वारकायां नारदागमनम्, श्रीकृष्णं प्रति शक्रसंदेशकथनं च । |
| २ | उद्धवबलदेवश्रीकृष्णानां मन्त्रवर्णनम् । |
| ३ | द्वारकातः श्रीकृष्णस्य प्रस्थानवर्णनम्, द्वारकासमुद्रयोर्वर्णनं च । |
| ४ | रैवतकपर्वतवर्णनम् । |
| ५ | स्कन्धावारसंनिवेशादिवर्णनम् । |
| ६ | षडृतुवर्णनम् । |
| ७ | पुष्पावचयवर्णनम् । |
| ८ | जलक्रीडावर्णनम् । |
| ९ | सायंकालचन्द्रोदयप्रसाधनादिवर्णनम् । |
| १० | पानगोष्ठीवर्णनं रात्रिक्रीडावर्णनं च । |
| ११ | प्रभातवर्णनम् । |
| १२ | पुनः प्रयाणवर्णनं यमुनावर्णनं च । |
| १३ | श्रीकृष्णपाण्डवयोः समागमवर्णनम्, श्रीकृष्णस्येन्द्रप्रस्थनगरप्रवेशे पौरनारिचेष्टावर्णनं युधिष्ठिरसभागृहवर्णनं च । |
| १४ | राजसूयक्रतुप्रस्तावस्तद्वर्णनं च । श्रीकृष्णं प्रत्यर्घदानवर्णनम्, भीष्मकृता श्रीकृष्णस्तुतिश्च । |
| १५ | शिशुपालक्षोभवर्णनम् । भीष्मवाक्यम् । शिशुपालपक्षमहीपतीनां क्षोभवर्णनम् । शिशुपालस्य सेनासंनाहवर्णनम् । युद्धायोपस्थितानां भटानां तत्पत्नीनां च चेष्टावर्णनम् । |
| १६ | शिशुपालदूतस्य श्रीकृष्णसदसि द्व्यर्थं वाक्यम्, दूतं प्रति सात्यकिवाक्यम्, पुनरपि दूतवाक्यम्, तन्मुखेन शिशुपालपराक्रमवर्णनं च । |
| १७ | श्रीकृष्णसभाक्षोभवर्णनम्, श्रीकृष्णस्य तत्सेनायाश्च संनाहवर्णनम्, सेनाप्रस्थानवर्णनं च । |
| १८ | सैन्यद्वयस्य समागमवर्णनम्, तुमुलयुद्धवर्णनं च । |
| १९ | चित्रयुद्धवर्णनम् । |
| २० | श्रीकृष्णशिशुपालयोरस्त्रयुद्धवर्णनम्, शिशुपालवधवर्णनं च । कविवंशवर्णनम् । ग्रन्थसमाप्तिः । |

॥ श्रीः ॥

श्रीमन्माघकविप्रणीतं

# शिशुपालवधम् ।

## मल्लिनाथकृतया सर्वंकषाव्याख्यया समेतम् ।

---

### प्रथमः सर्गः ।

इन्दीवरदलश्याममिन्दिरानन्दकन्दलम् ।
वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ।

दन्ताञ्चलेन धरणीतलमुन्नमय्य पातालकेलिषु धृतादिवराहलीलम् ।
उल्लाघनोत्फणफणाधरगीयमानक्रीडावदानमिभराजमुखं नमामः ॥

शारदा शारदाम्भोजवदना वदनाम्बुजे ।
सर्वदा सर्वदास्माकं संनिधिं संनिधिं क्रियात् ॥

वाणीं काणभुजीमजीगणदवाशासीच्च वैयासिकी-
मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत् ।
वाचामाचकलद्रहस्यमखिलं यश्चाक्षपादस्फुरां
लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः ॥

मल्लिनाथः सुधीः सोऽयं महोपाध्यायशब्दभाक् ।
विधत्ते माघकाव्यस्य व्याख्यां सर्वंकषाभिधाम् ॥

ये शब्दार्थपरीक्षणप्रणयिनो ये वा गुणालंक्रिया-
शिक्षाकौतुकिनो विहर्तुमनसो ये च ध्वनेरध्वनि ।
क्षुभ्यन्नावतरङ्गिते रससुधापूरे निमङ्क्षन्ति ये
तेषामेव कृते करोमि विवृतिं माघस्य सर्वंकषाम् ॥

नेतास्मिन्यदुनन्दनः स भगवान्वीरः प्रधानो रसः
शृङ्गारादिभिरङ्गवान्विजयते पूर्णा पुनर्वर्णना ।
इन्द्रप्रस्थगमाद्युपायविषयश्चैद्यावसादः फलं
धन्यो माघकविर्वयं तु कृतिनस्तत्सूक्तिसंसेवनात् ॥

इहान्वयमुखेनैव सर्वं व्याख्यायते मया ।
नामूलं लिख्यते किंचिन्नानपेक्षितमुच्यते ॥

अथ तत्रभवान्माघकविः 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥' इत्यालंकारिकवचनप्रामाण्यात्का-

स्यानेकश्रेयःसाधनतां, 'काव्यालापांश्च वर्जयेत्' इति निषेधस्यासत्काव्यविषयतां च पश्यञ्शिशुपालवधाख्यं काव्यं चिकीर्षुश्चिकीर्षितार्थाविघ्नपरिसमाप्तिसंप्रदायाविच्छेदलक्षणफलसाधनत्वात् 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' इत्याशीराद्यन्यतमस्य प्रबन्धमुखलक्षणत्वाच्च काव्यफलशिशुपालवधबीजभूतं भगवतः श्रीकृष्णस्य नारददर्शनरूपं वस्तु आदौ श्रीशब्दप्रयोगपूर्वकं निर्दिशन् कथामुपक्षिपति—

**श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि ।**
**वसन्ददर्शावतरन्तमम्बराद्धिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥ १ ॥**

**श्रिय इति** ॥ तत्रादौ श्रीशब्दप्रयोगाद्वर्णगणादिशुद्धेरभ्युच्चयः । तदुक्तम्—'देवतावाचकाः शब्दा ये च भद्रादिवाचकाः । ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा ॥' इति । श्रियो लक्ष्म्याः पतिः । अनेन रुक्मिणीरूपया श्रिया समेत इति सूचितम् । 'राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि' इति विष्णुपुराणात् । जगन्निवासो जगतामाधारभूतः । कुक्षिस्थाखिलभुवन इति यावत् । तथापि जगत् लोकं शासितुं दुष्टनिग्रहशिष्टानुग्रहाभ्यां नियन्तुं श्रीमति लक्ष्मीयुक्ते वसुदेवसद्मनि वसुदेवरूपिणः कश्यपस्य वेश्मनि वसन्कृष्णरूपेण तिष्ठन् हरिर्विष्णुरम्बरादवतरन्तमायान्तम् । इन्द्रसंदेशकथनार्थमिति भावः । हिरण्यस्य गर्भो हिरण्यगर्भो ब्रह्मा । ब्रह्माण्डप्रभवत्वात् । तस्याङ्गभुवं तनूजम् । अथवा तस्याङ्गादवयवादुत्सङ्गाख्याद्भवतीति हिरण्यगर्भाङ्गभूस्तं मुनिम् । नारदमित्यर्थः । 'उत्सङ्गान्नारदो जज्ञे दक्षोऽङ्गुष्ठात्स्वयंभुवः' इति भागवतात् । ददर्श । कदाचिदिति शेषः । अत्राल्पीयसि वसुदेवसद्मनि सकलजगदाश्रयतया महीयसो हरेराधेयत्वकथनादधिकप्रभेदोऽर्थालंकारः । तदुक्तम्—'आधाराधेययोरानुरूप्याभावोऽधिको मतः' इति । जगन्निवासस्य जगदेकदेशनिवासित्वमिति विरोधश्च । तथा तकारसकारादेः केवलस्यासकृदावृत्त्या जगज्जगदिति सकृद्व्यञ्जनद्वयसादृश्याच्च वृत्त्यनुप्रासभेदौ शब्दालंकारौ । एषां चान्योन्यनैरपेक्ष्येणैकत्र समावेशात्तिलतण्डुलवत्संसृष्टिः । सर्गेऽस्मिन्वंशस्थं वृत्तम् । 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ॥

इदानीं जनैर्विस्मयादीक्षितुं प्रवृत्तमित्याह—

**गतं तिरश्चीनमनूरुसारथेः प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः ।**
**पतत्यधो धाम विसारि सर्वतः किमेतदित्याकुलमीक्षितं जनैः ॥ २ ॥**

**गतमिति** ॥ अविद्यमानावूरू यस्य सोऽनूरुः स सारथिर्यस्य तस्यानूरुसारथेः सूर्यस्य गतं गतिः । भावे क्तः । तिरश्चीनं तिर्यग्भूतम् । 'विभाषाञ्चेरदिक्स्त्रियाम्' इति तिर्यक्शब्दादञ्चत्यन्तात्प्रातिपदिकात्स्वार्थे खप्रत्ययः । हविर्भुजोऽग्नेरूर्ध्वज्वलनमूर्ध्वस्फुरणं प्रसिद्धम् । इदं तु सर्वतो विसारि धामाधः पतति । किमेतदिति सूर्याग्निविलक्षणमदृष्टपूर्वमिदं धाम किमात्मकं स्यादित्याकुलं विस्मयात्संभ्रान्तं यथा तथा जनैरीक्षितमीक्षणं कृतम् । सकर्मकादप्यविवक्षिते कर्मणि

भावे क्तः । 'प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया' इति वचनात् । केचित्कर्मणि क्तान्तं कृत्वा ईक्षितं मुनिं ददर्शेति पूर्वेण योजयन्ति । अत्रोपमेयस्य मुनिधाम्नः सूर्याग्निभ्यामुपमानाभ्यामधःप्रसरणधर्मेणाधिक्यवर्णनाद्व्यतिरेकः । तदुक्तं काव्यप्रकाशे—'उपमानाद्यदन्यस्य व्यतिरेकः स एव सः' इति । 'धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोः' इति हेमचन्द्रः, दिवाकरस्तु[1] वृत्तरत्नाकरटीकायां प्रथमपठितेन 'द्विधाकृतात्मा किमयं दिवाकरो विधूमरोचिः किमयं हुताशनः' इति चरणद्वयेन सहेममेव श्लोकं षट्पदच्छन्दस उदाहरणमाह । तत्राद्यचरणद्वयेन संदेहालंकारो गतमिति तन्निरासश्च बोध्य इत्युपरिष्टात् ॥

अथ भगवान्निरणैषीदित्याह—

**चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम् ।**
**विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः ॥३॥**

चय इति ॥ विभुर्वस्तुतत्त्वावधारणसमर्थः स हरिः पुरा प्रथमं त्विषां चय इत्यवधारितं तेजःपुञ्जमात्रत्वेन विनिश्चितम् । ततः प्रत्यासन्ने विभाविता विमृष्टा आकृतिः संस्थानं यस्य तं तथोक्तम् । अतएव शरीरी चेतन इत्यवधारितम् । ततो विभक्ता विविच्य गृहीता अवयवा मुखादयो यस्य तं तथोक्तम् । अतएव पुमानित्यवधारितम् । अमुमागच्छन्तं व्यक्तिविशेषं नारदं वास्तवाभिप्रायेणेति पुंलिङ्गनिर्वाहः । क्रमात्पूर्वोक्तसामान्यविशेषज्ञानक्रमेण । लोकदृष्ट्येदमुक्तम् । हरिस्तु सर्वं वेदैवेति तत्त्वम् । नारद इत्यबोधि । नारदं बुद्धवानित्यर्थः । नारदस्य कर्मत्वेऽपि निपातशब्देनाभिहितत्वान्न द्वितीया । तिङ्ग्रहणमुपसंख्यानस्योपलक्षणत्वात् । यथाह वामनः—'निपातेनाभिहिते कर्मणि न कर्मविभक्तिः । परिगणनस्य प्रायिकत्वात्' इति बुध्यतेः कर्तरि लुङ् । 'दीपजन–' इत्यादिना चिण् । 'चिणो लुक्' इति तस्य लुक् । अत्र विभाविताकृतिं विभक्तावयवमित्यादिना आकृतिविभावनावयवविभावनयोः पदार्थयोर्विशेषणवृत्त्या शरीरित्वपुंस्त्वावधारणहेतुत्वेनोपन्यासात्पदार्थहेतुकं काव्यलिङ्गमलंकारः । 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' इति लक्षणात् ॥

अथ सप्तभिर्मुनिं विशिनष्टि—

**नवानधोऽधो बृहतः पयोधरान्समूढकर्पूरपरागपाण्डुरम् ।**
**क्षणं क्षणोत्क्षिप्तगजेन्द्रकृत्तिना स्फुटोपमं भूतिसितेन शंभुना ॥४॥**

नवानित्यादिभिः ॥ कीदृशममुम् । नवान्सद्यःसंभृतसलिलान् । अतिनीलानिति यावत् । बृहतो विपुलान्पयोधरान्मेघानधोऽधः । मेघानां समीपाधःप्रदेशे स्थितमिति शेषः । 'उपर्यध्यधसः सामीप्ये' इति द्विर्भावः । तद्योगे द्वितीया । 'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु' इत्यादिवचनात् । समूढः पुञ्जीकृतः ।

---

[1] अयं कुत्रचिन्नोपलभ्यते.

'समूहः पुञ्जिते शुभ्रे' इति विश्वः। कर्पूरस्य परागश्चूर्णं तद्वत्पाण्डुरम्। अतएव क्षणं मेघसमीपावस्थानक्षणे। अत्यन्तसंयोगे द्वितीया। क्षणेषु ताण्डवोत्सवेषु। 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः' इत्युभयत्राप्यमरः। उत्क्षिप्ता उपरि धारिता गजेन्द्रस्य कृत्तिश्चर्म येन तेन। 'अजिनं चर्म कृत्तिः स्त्री' इत्यमरः। भूत्या भस्मना सितेन। 'भूतिर्भस्मनि संपदि' इत्यमरः। शंभुना स्फुटा उपमा सादृश्यं यस्य तं स्फुटोपमम्। स्फुटशंभूपममित्यर्थः। सापेक्षत्वेऽपि गमकत्वात्समासः। सदृशपर्याययोस्तुलोपमाशब्दयोः 'अतुलोपमाभ्याम्–' इति निषेधात्सादृश्यवाचित्वे तृतीयेत्याहुः। केचिदिमं श्लोकं चयस्त्विषामित्यतः प्राग्लिखित्वा व्याचक्षते। तेषां पुंस्त्वावधारणाद्याक्तेजःपिण्डमात्रस्य शंभूपमौचित्यं चिन्त्यम्॥

दधानमम्भोरुहकेसरद्युतीर्जटाः शरच्चन्द्रमरीचिरोचिषम्।
विपाकपिङ्गास्तुहिनस्थलीरुहो धराधरेन्द्रं व्रततीततीरिव ॥ ५ ॥

दधानमिति ॥ पुनः। अम्भोरुहकेसरद्युतीः पद्मकिंजल्कप्रभापिशङ्गीरित्यर्थः। जटा दधानम्, स्वयं तु शरच्चन्द्रमरीचिरिव रोचिर्यस्य तम्। धवलमित्यर्थः। अतएव विपाकेन परिणामेन पिङ्गाः पिङ्गलास्तुहिनस्थल्यां तुषारभूमौ रोहन्तीति तुहिनस्थलीरुहः व्रततीततीर्लताव्यूहान् 'वल्ली तु व्रततिर्लता' इत्यमरः। दधानं धराधरेन्द्रो हिमवान् तुहिनस्थलीति लिङ्गाद्यारदोपमानत्वाच्च तमिव स्थितम्॥

पिशङ्गमौञ्जीयुजमर्जुनच्छविं वसानमेणाजिनमञ्जनद्युति।
सुवर्णसूत्राकलिताधराम्बरां विडम्बयन्तं शितिवाससस्तनुम् ॥ ६ ॥

पिशङ्गेति ॥ पुनः कीदृशम्। मुञ्जस्तृणविशेषः तन्मयी मेखला मौञ्जी पिशङ्गया मौञ्ज्या युज्यत इति पिशङ्गमौञ्जीयुक् तम्। 'सत्सूद्विष–' इत्यादिना क्विप्। 'स्त्रियाः पुंवत्–' इति पिशङ्गशब्दस्य पुंवद्भावः। अर्जुनच्छविं धवलकान्तिम्। 'वलक्षो धवलोऽर्जुनः' इत्यमरः। अञ्जनद्युत्यञ्जनवर्णं एणाजिनं कृष्णमृगचर्म वसानमाच्छादयन्तम्। 'वस आच्छादने' इति धातोः शानच्। सुवर्णसूत्रेण कनकमेखलया आकलितं बद्धमधराम्बरमन्तरीयं यस्यास्तां शितिवाससो नीलाम्बरस्य रामस्य तनुं विडम्बयन्तम्। अनुकुर्वाणमित्यर्थः। आर्थीयमुपमा॥

विहंगराजाङ्गरुहैरिवायतैर्हिरण्मयोर्वीरुहवल्लितन्तुभिः।
कृतोपवीतं हिमशुभ्रमुच्चकैर्घनं घनान्ते तडितां गणैरिव ॥ ७ ॥

विहंगेति ॥ पुनः। विहंगराजाङ्गरुहैरिव गरुत्मल्लोमतुल्यैरायतैर्दीर्घैः। हिरण्यस्य विकारो हिरण्मयी। 'दाण्डिनायन–' इत्यादिना मयटि यलोपनिपातः। तस्यामुर्व्यां रुहा रूढाः। इगुपधलक्षणः कप्रत्ययः। तासां वल्लीनां तन्तुभिस्तुल्यैः सूक्ष्मावयवैः। उपादानगुणात्। हिरण्मयैः कृतोपवीतं शोभार्थं कल्पितयज्ञसूत्रं स्वयं हिमशुभ्रम्। अतएव घनान्ते शरदि तडितां गणैरुपलक्षितम्। 'तडित्सौदामनी विद्युत्' इत्यमरः। उच्चैरेवोच्चकैरुन्नतं घनं मेघमिव स्थितम्॥

निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा लसद्बिसच्छेदसिताङ्गसङ्गिना ।
चकासतं चारुचमूरुचर्मणा कुथेन नागेन्द्रमिवेन्द्रवाहनम् ॥ ८ ॥

निसर्गेति ॥ पुनः निसर्गात्स्वभावादेव चित्राणि शबलान्युज्ज्वलानि भास्वराणि सूक्ष्माणि पक्ष्माणि लोमानि यस्य तेन लसन्यो बिसच्छेदो मृणालखण्डः । 'छेदः खण्डोऽस्त्रियाम्' इति त्रिकाण्डशेषः । तद्वत्सितेऽङ्गे वपुषि सङ्गिना सक्तेन चारुणा मनोहरेण चमूरुचर्मणा मृगत्वचा कुथेन पृष्ठास्तरणेन । 'प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः' इत्यमरः । इन्द्रवाहनं नागेन्द्रमैरावतमिव चकासतं शोभमानम् । इन्द्रस्य वाहनमिति स्वस्वामिभावमात्रस्य विवक्षितत्वात् 'वाहनमाहितात्' इति न णत्वम् । यथाह वामनः—'नेन्द्रवाहनशब्दे णत्वमाहितत्वस्याविवक्षितत्वात्' इति । चकासतेः शतरि 'नाभ्यस्ताच्छतुः' इति नुमभावः । 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा ॥

अजस्रमास्फालितवल्लकीगुणक्षतोज्ज्वलाङ्गुष्ठनखांशुभिन्नया ।
पुरः प्रवालैरिव पूरितार्धया विभान्तमच्छस्फटिकाक्षमालया ॥९॥

अजस्रमिति ॥ पुनरजस्रं प्राचुर्येणास्फालितास्ताडिताः । सौष्ठवपरीक्षार्थं न्युब्जाङ्गुष्ठेन तन्त्रीताडनं प्रसिद्धम् । तेषां वल्लकीगुणानां वीणातन्त्रीणां क्षतेन संघर्षणेनोज्ज्वलैरङ्गुष्ठनखांशुभिर्भिन्नया मिश्रया । तद्रागरक्तयेत्यर्थः । अतएव पुरः पुरोभागे प्रवालैर्विद्रुमैः । '–अथ विद्रुमः पुंसि प्रवालं पुंनपुंसकम्' इत्यमरः । पूरितार्धयेव स्थितया अच्छस्फटिकाक्षमालया स्वच्छस्फटिकानां मालया । जपमालयेत्यर्थः । 'अच्छो भल्लूके स्फटिकेऽमलेच्छाभिमुखेऽव्ययम्' इति हेमचन्द्रः । तथा प्रसिद्धस्फटिकग्रहणादस्यैर्मोक्षार्थित्वं व्यज्यते । 'स्फटिको मोक्षदः परम्' इति मोक्षार्थिनां स्फटिकाक्षमालाभिधानात् । विभान्तं भासमानम् । भातेः शतृप्रत्ययः । अत्र नखांशुभिन्नयेति स्वगुणत्यागेनान्यगुणस्वीकारलक्षणस्तद्गुणालंकार उक्तः । 'तद्गुणः स्वगुणत्यागात्' इति ॥

रणद्भिराघट्टनया नभस्वतः पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः ।
स्फुटीभवद्ग्रामविशेषमूर्च्छनामवेक्षमाणं महतीं मुहुर्मुहुः ॥ १० ॥

रणद्भिरिति ॥ पुनः नभस्वतो वायोराघट्टनया आघातेन पृथगसंकीर्णं रणद्भिर्ध्वनद्भिः । अनुरणनोत्पद्यमानैरित्यर्थः । 'श्रुत्यारब्धमनुरणनं स्वरः' इति लक्षणात् । तदुक्तं रत्नाकरे—'श्रुत्यनन्तरभावी यः स्निग्धोऽनुरणनात्मकः । स्वतो रञ्जयति श्रोतृचित्तं स स्वर उच्यते ॥' इति । श्रुतिर्नाम स्वरारम्भकावयवः शब्दविशेषः । तदुक्तम्—'प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः । सा श्रुतिः संपरिज्ञेया स्वरावयवलक्षणा ॥' इति । विभिन्नानि प्रतिनियतसंख्यया व्यवस्थितानि श्रुतीनां

---

१ 'भाश्रावित' इति पाठः.

मण्डलानि समूहा येषां तैर्विभिन्नश्रुतिमण्डलैः। श्रुतिसंख्यानियमश्च दर्शितः— 'चतुश्चतुश्चतुश्चैव षड्जमध्यमपञ्चमाः। द्वे द्वे निषादगान्धारौ त्रिस्त्रिर्ऋषभधैवतौ ॥' षड्जादयः सप्तोक्तलक्षणाः। तदुक्तम्—'श्रुतिभ्यः स्युः स्वराः षड्जर्षभगान्धारमध्यमाः। पञ्चमो धैवतश्चाथ निषाद इति सप्त ते। तेषां संज्ञाः सरिगमपधनीत्यपरा मताः ॥' इति। तैः स्वरैः स्फुटीभवन्त्यो ग्रामविशेषाणां षड्जाद्यपरनामकानां स्वरसंघातभेदानां त्रयाणां मूर्च्छनाः स्वरारोहावरोहक्रमभेदा यस्यां तां महतीं महतीनाम्नीं निजवीणाम्। 'विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती। महती नारदस्य स्यात्सरस्वत्यास्तु कच्छपी ॥' इति वैजयन्ती। मुहुर्मुहुरवेक्षमाणम्। तन्त्रीयोजनाभेदलक्षणमहिम्ना पुरुषप्रयत्नमन्तरेणैवाविसंवादं ध्वनतीति कौतुकादनुसंदधानमित्यर्थः। अथ ग्रामलक्षणम्—'यथा कुटुम्बिनः सर्वेऽप्येकीभूता भवन्ति हि। तथा स्वराणां संदोहो ग्राम इत्यभिधीयते॥ षड्जग्रामो भवेदादौ मध्यमग्राम एव च। गान्धारग्राम इत्येतद्ग्रामत्रयमुदाहृतम् ॥' इति। तथा—'नन्द्यावर्तोऽथ जीमूतः सुभद्रो ग्रामकास्त्रयः। षड्जमध्यमगान्धारास्त्रयाणां जन्महेतवः ॥' इति। मूर्च्छनालक्षणं च—'क्रमात्स्वराणां सप्तानामारोहश्चावरोहणम्। सा मूर्च्छेत्युच्यते ग्रामस्था एताः सप्त सप्त च ॥' ग्रामत्रयेऽपि प्रत्येकं सप्त सप्त मूर्च्छना इत्येकविंशतिमूर्च्छना भवन्ति। तत्रेह नामानि तु 'नानपेक्षितमुच्यते' इति प्रतिज्ञाभङ्गभयान्न लिख्यन्त इति सर्वमवदातम्। अत्र पुंव्यापारमन्तरेण स्वराद्याविर्भावोक्त्या कोऽपि लोकातिक्रान्तोऽयं शिल्पसौष्ठवातिशयो वीणायाः प्रतीयते। तेन सह स्वतःप्रसिद्धातिशयस्याभेदेनाध्यवसितत्वात्तन्मूलातिशयोक्तिरलंकारः। सा च महत्याः पुंव्यापारं विना मूर्च्छाद्यसंबन्धेऽपि संबन्धाभिधानादसंबन्धे संबन्धरूपतया पुंव्यापाराख्यरूपकारणं विनापि मूर्च्छनादिकार्योत्पत्तिद्योतनाद्विभावना व्यज्यत इत्यलंकारध्वनिरिति संक्षेपः ॥

**निवर्त्य सोऽनुव्रजतः कृतानतीनतीन्द्रियज्ञाननिधिर्नभःसदः।**
**समासदत्सादितदैत्यसंपदः पदं महेन्द्रालयचारु चक्रिणः ॥ ११ ॥**

**निवर्त्येति** ॥ अतीन्द्रिया इन्द्रियमतिक्रान्ता देशकालस्वरूपादिविप्रकृष्टार्थाः। 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः। 'द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु परलिङ्गताप्रतिषेधो वक्तव्यः' इति विशेष्यलिङ्गत्वम्। तेषां ज्ञानं तस्य निधिः। सर्वार्थद्रष्टेत्यर्थः। कृतानतीन्कृतप्रणामाननुव्रजतोऽनुगच्छतः नभस्याकाशे सीदन्ति गच्छन्तीति नभःसदः सुरान्। 'सत्सूद्विष–' इत्यादिना क्विप्। निवर्त्य प्रतिषिध्य स मुनिः सादितदैत्यसंपदः सादिताः विध्वस्तीकृताः दैत्यानां संपदो येन तस्य चक्रिणः कृष्णस्य पदं स्थानं महेन्द्रालयचारु इन्द्रभवनमिव भासमानं समासदत्। समाङ्पूर्वात्षद्लृधातोर्लुङ्। 'पुषादि–' इत्यङ्। अत्र नतीनती पदःपदमिति च द्वयोर्व्यञ्जनयुग्मयोरसकृदावृत्त्या छेकानुप्रासः। अन्यत्र वृत्त्यनुप्रास इत्यनयोः संसृष्टिः ॥

**पतत्पतङ्गप्रतिमस्तपोनिधिः पुरोऽस्य यावन्न भुवि व्यलीयत ।**
**गिरेस्तडित्वानिव तावदुच्चकैर्जवेन पीठादुदतिष्ठदच्युतः ॥ १२ ॥**

**पतदिति** ॥ पतन्यः पतङ्गः सूर्यः स प्रतिमोपमानं यस्य सः । 'पतङ्गौ पक्षिसूर्यौ च' इत्यमरः । तपोनिधिर्मुनिरस्य हरेः पुरो भुवि पुरःप्रदेशे यावन्न व्यलीयत नातिष्ठत् । 'लीङ् गतौ' इति धातोर्दैवादिकात्कर्तरि लुङ् । तावदच्युतो हरिर्गिरेः शैलात् । तडितोऽस्य सन्तीति तडित्वान्मेघ इव । 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' इति मतुपो मकारस्य वकारः । 'तसौ मत्वर्थे' इति भसंज्ञायामेकसंज्ञाधिकारेणापदत्वाच्च जश्त्वम् । उच्चकैरुन्नतात्पीठादासनाज्जवेनोदतिष्ठत् । मुनिचरणस्य भूस्पर्शात्प्रागेव स्वयमुत्थितवान् । 'ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति । प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ॥' इति शास्त्रमनुस्मरन्निति भावः । 'उदोऽनूर्ध्वकर्मणि' इति नियमादिहोर्ध्वकर्मणि नात्मनेपदम् । पतत्पतङ्ग इत्यत्र पतङ्गस्य पतनासंभवादियमभूतोपमेत्याचार्यदण्डिप्रभृतयो बभणुः । अतएवात्राप्रसिद्धस्योपमानत्वायोगादुत्प्रेक्षेत्याधुनिकालंकारिकाः सर्वे वर्णयन्ति ॥

**अथ प्रयत्नोन्नमितानमत्फणैर्धृते कथंचित्फणिनां गणैरधः ।**
**न्यधायिषातामभिदेवकीसुतं सुतेन धातुश्चरणौ भुवस्तले ॥ १३ ॥**

**अथेति** ॥ अथाच्युताभ्युत्थानानन्तरं धातुः सुतेन नारदेन प्रयत्नोन्नमितास्तथापि मुनिपादन्यासभारादानमन्त्यः फणा येषां तैः फणिनां गणैरधोऽधःप्रदेशे कथंचिद्धृते स्थापिते भुवस्तले भूपृष्ठे । अभिदेवकीसुतं देवकीसुतमभि । लक्ष्यीकृत्येत्यर्थः । 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः । चरणौ पादौ । 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः । न्यधायिषातां निहितौ । दधातेः कर्मणि लुङ् । 'स्यसिच्सी–' इत्यादिना चिण्वदिटि युक् । अत्र फणानां नमनोन्नमनासंबन्धेऽपि मुनिगौरवाय तत्संबन्धाभिधानादतिशयोक्तिभेदः ॥

**तमर्घ्यमर्घ्यादिकयादिपूरुषः सपर्यया साधु स पर्यपूपुजत् ।**
**गृहानुपैतुं प्रणयादभीप्सवो भवन्ति नापुण्यकृतां मनीषिणः ॥१४॥**

**तमिति** ॥ आदिपूरुषः पुराणपुरुषः । 'अन्येषामपि दृश्यते' इति वा दीर्घः । स कृष्णः । अर्घं पूजामर्हतीत्यर्घ्यः । 'दण्डादिभ्यो यः' । तं नारदम् । अर्घार्थं द्रव्यमर्घ्यम् । 'पादार्घाभ्यां च' इति यत्प्रत्ययः । 'मूल्ये पूजाविधावर्घः', 'षट् तु त्रिष्वर्घ्यमर्घार्थे' इति चामरः । अर्घ्यमादिर्यस्यास्तयार्घ्यादिकया । 'शेषाद्विभाषा' इति विकल्पेन कप्प्रत्ययः । सपर्यया पूजया । 'पूजा नमस्यापचितिः सपर्यार्चार्हणाः समाः' इत्यमरः । साधु यथा तथा पर्यपूपुजत्परिपूजितवान् । णौ चङन्तं कर्तव्यम् । युक्तं चैतदित्यर्थान्तरं न्यस्यति—गृहानिति । मनस ईषिणो मनीषिणः सन्तः । पृषोदरादित्वात्साधुः । अपुण्यकृतां पुण्यमकृतवताम् । 'सुकर्मपापमन्त्रपुण्येषु कृञः' इति भूते क्विप् । गृहान्प्रणयादुपैतुमभीप्सवः प्राप्तुमिच्छवः । आप्नोतेः सन्नन्तादु-

प्रत्ययः । 'आपृच्छ्यपृथामीत्' इतीकारः । न भवन्ति किंतु पुण्यकृतामेव । अतः कृच्छ्रलभ्याः सन्तः पूज्या इत्यर्थः ॥

**न यावदेतावुदपश्यदुत्थितौ जनस्तुषाराञ्जनपर्वताविव ।**
**स्वहस्तदत्ते मुनिमासने मुनिश्चिरंतनस्तावदभिन्यवीविशत् ॥ १५ ॥**

**न यावदिति** ॥ उत्थितावेतौ मुनिकृष्णौ जनस्तुषाराञ्जनयोः पर्वताविव यावन्नोदपश्यन्नोत्प्रेक्षितवान् । तावच्चिरंतनः पुराणो मुनिः कृष्णः 'पुरा किल भगवान्बदरिकारण्ये नारायणावतारेण तपसि स्थितवान्' इति पुराणात् । 'सायंचिरम्–' इत्यादिना ट्युप्रत्ययस्तुडागमश्च । स्वहस्तेन दत्ते आसने मुनिं नारदमभिन्यवीविशत्स्वाभिमुखेनोपवेशितवान् । अभिनिपूर्वाद्विशतेर्ण्यन्ताल्लुङि 'णिश्रि–' इति चङ् ॥

**महामहानीलशिलारुचः पुरो निषेदिवान्कंसकृषः स विष्टरे ।**
**श्रितोदयाद्रेरभिसायमुच्चकैरचूचुरच्चन्द्रमसोऽभिरामताम् ॥ १६ ॥**

**महामहेति** ॥ महत्या महानीलशिलायाः सिंहलद्वीपसंभवेन्द्रनीलोत्पलस्य रुगिव रुग्यस्य तस्येत्युपमालंकारः । 'सिंहलस्थाकरोद्भूता महानीलास्तु ते स्मृताः' इति भगवानगस्त्यः । कंसकृषो हरेः पुरोऽग्र उच्चकैरुन्नते विष्टर आसने । 'वृक्षासनयोर्विष्टरः' इति षत्वम् । निषेदिवानुपविष्टवान् । 'भाषायां सदवसश्रुवः' इति क्वसुः । स मुनिरभिसायं सायंकालाभिमुखम् । अव्ययीभावसमासः । सायंकालस्य कार्ष्ण्यात्कृष्णोपमानत्वम् । श्रित आश्रित उदयाद्रिरुदयाचलो येन तस्य चन्द्रमसोऽभिरामतां शोभामचूचुरच्चोरितवान् । प्राप्तवानित्यर्थः । 'चुर स्तेये' 'णिश्रि–' इति चङ् । 'अन्यस्यान्यधर्मसंबन्धसंभवाच्चन्द्रमसोऽभिरामतामिवाभिरामतामि'त्यौपम्यपर्यवसानादसंभवद्वस्तुसंबन्धरूपो निदर्शनाभेदः स चोक्तोपमयाङ्गाङ्गिभावेन संकीर्यते ॥

**विधाय तस्यापचितिं प्रसेदुषः प्रकाममप्रीयत यज्वनां प्रियः ।**
**ग्रहीतुमार्यान्परिचर्यया मुहुर्महानुभावा हि नितान्तमर्थिनः ॥ १७ ॥**

**विधायेति** ॥ यज्वानो विधिनेष्टवन्तः । 'यज्वा तु विधिनेष्टवान्' इत्यमरः । 'सुयजोः–' इति यजिधातोर्ङ्वनिप् । तेषां प्रियो हरिः प्रसेदुषः प्रसन्नस्य । 'सदेः क्वसुः' इत्युक्तम् । तस्य मुनेरपचितिं पूजाम् । 'पूजा नमस्यापचितिः' इत्यमरः । विधाय विशेषेण मनोवाक्कायकर्मभिस्तत्परतया कृत्वा प्रकाममत्यर्थमप्रीयत प्रीतोऽभूत् । प्रीयतेर्दैवादिकात्कर्तरि लङ् । मुनिपूजायाः प्रीतिहेतुत्वेऽर्थान्तरं न्यस्यति—महानुभावा महात्मान आर्यान्पूज्यान्परिचर्यया मुहुर्ग्रहीतुं वशीकर्तुम् । 'ग्रहोऽलिटि दीर्घः' इतीटो दीर्घः । नितान्तमर्थिनोऽभिलाषवन्तो हि भवन्ति । अर्थनमर्थोऽभिलाषः स एषामस्तीति मत्वर्थ इनिर्न तु णिनिः । 'कृद्वृत्तेस्तद्धितवृत्तिर्बलीयसी' इति भाष्यात् ॥

अशेषतीर्थोपहृताः कमण्डलोर्निधाय पाणावृषिणाभ्युदीरिताः ।
अघौघविध्वंसविधौ पटीयसीर्नतेन मूर्ध्ना हरिरग्रहीदपः ॥ १८ ॥

अशेषेति ॥ अशेषेभ्यस्तीर्थेभ्य उपहृता आहृतास्तथा पाणौ निधाय । कमण्डलोरुदकपात्रादुद्धृत्य पाणौ निधायेत्यर्थः । क्रियान्तराक्षिप्तक्रियापेक्षया कमण्डलोरपादानत्वम् । 'अक्षी कमण्डलुः कुण्डी' इत्यमरः । ऋषिणाभ्युदीरिता आक्षिप्ता अतएवाघौघानां पापसमूहानां विध्वंसविधौ विनाशकरणे पटीयसीः समर्थतराः । पटुशब्दादीयसुनि 'उगितश्च' इति ङीप् । अपो जलानि हरिर्नतेन मूर्ध्नाग्रहीत्स्वीकृतवान् । ग्रहेर्लुङ् ॥

स काञ्चने यत्र मुनेरनुज्ञया नवाम्बुदश्यामवपुर्न्यविक्षत ।
जिगाय जम्बूजनितश्रियः श्रियं सुमेरुशृङ्गस्य तदा तदासनम् १९

स काञ्चनेति ॥ नवाम्बुदश्यामतनुः स हरिर्मुनेरनुज्ञया काञ्चने काञ्चनविकारे । वैकारिकोऽण्प्रत्ययः । यत्रासने न्यविक्षतोपविष्टवान् । निपूर्वकविशो लुङि 'नेर्विशः' इत्यात्मनेपदे 'शल इगुपधादनिटः क्सः' । तदासनं तदा हर्युपवेशनसमये जम्बूर्नीलफलविशेषः । 'जम्बूः सुरभिपत्रा च राजजम्बूर्महाफला' इत्यभिधानरत्नमालायाम् । तया जनिता श्रीर्यस्य तत्तथोक्तस्य । भाषितपुंस्कत्वात्पक्षे पुंवद्भावाक्षमभावः । सुमेरुशृङ्गस्य श्रियं जिगाय । अभिभावितवानित्यर्थः । 'सन्लिटोर्जेः' इति कुत्वम् । उपमानुप्रासयोः संसृष्टिः ॥

स तप्तकार्तस्वरभास्वराम्बरः कठोरताराधिपलाञ्छनच्छविः ।
विदिद्युते वाडवजातवेदसः शिखाभिराश्लिष्ट इवाम्भसां निधिः २०

स तप्तेति ॥ तप्तं पुटपाकशोधितं कार्तस्वरं सुवर्णम् । 'रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्' इत्यमरः । तद्वद्भास्वरं दीप्यमानमम्बरं यस्य सः । पीताम्बर इत्यर्थः । कठोरताराधिपस्य पूर्णेन्दोर्लाञ्छनस्य छविरिव छविर्यस्य स इत्युपमानपूर्वपदो बहुव्रीहिरुत्तरपदलोपश्च । स हरिर्वाडवजातवेदसो वाडवाग्नेः शिखाभिर्ज्वालाभिराश्लिष्टो व्याप्तोऽम्भसां निधिरिव समुद्र इव विदिद्युते बभौ ॥

रथाङ्गपाणेः पटलेन रोचिषामृषित्विषः संवलिता विरेजिरे ।
चलत्पलाशान्तरगोचरास्तरोस्तुषारमूर्तेरिव नक्तमंशवः ॥ २१ ॥

रथाङ्गपाणेरिति ॥ रथाङ्गं चक्रं पाणौ यस्य तस्य हरेः । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः' इति पाणेः परनिपातः । रोचिषां छवीनां पटलेन समूहेन संवलिता मिलिता ऋषित्विषो नक्तं रात्रौ । सप्तम्यर्थेऽव्ययम् । तरोश्चलतां पलाशानां पत्राणामन्तराणि विवराणि गोचर आश्रयो येषां ते, तुषारा मूर्तिर्यस्य तस्येन्दोरंशव इव विरेजिरे चकाशिरे ॥

प्रफुल्लतापिच्छनिभैरभीषुभिः शुभैश्च सप्तच्छदपांसुपाण्डुभिः ।
परस्परेण च्छुरितामलच्छवी तदैकवर्णाविव तौ बभूवतुः ॥ २२ ॥

प्रफुल्लेति ॥ प्रफुल्लतीति प्रफुल्लं विकसितम्। 'फुल्ल विकसने' इति धातोः पचाद्यजन्तम्। फलेर्निष्ठायाम् 'अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः' इति निपातनात्प्रफुल्लमित्येवेति क्षीरस्वामी। तापिच्छस्य तमालस्य पुष्पं तापिच्छम्। 'फले लुक्' इति तद्धितलुक्। 'द्विहीनं प्रसवे सर्वम्' इति नपुंसकत्वम्। 'कालस्कन्धस्तमालः स्यात्तापिच्छोऽपि' इत्यमरः। तेन सदृशैः प्रफुल्लतापिच्छनिभैः। नित्यसमासत्वादस्वपदविग्रहः। अतएव 'स्युरुत्तरपदे त्वमी' इति, 'निभसंकाशनीकाशप्रतीकाशोपमादयः' इत्यमरः। सप्त छदाः पर्णानि पर्वसु यस्येति सप्तच्छदो वृक्षभेदः। 'सप्तपर्णो विशालत्वक्शारदो विषमच्छदः' इत्यमरः। संख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वं सप्तपर्णादिवदित्युक्तं भाष्ये। शेषं तापिच्छवत्। तस्य पुष्पाणि सप्तच्छदानि तेषां पांसुवत्पाण्डुभिः शुभ्रैरभीषुभिरन्योन्यरश्मिभिः 'अभीषुः प्रग्रहे रश्मौ' इति शाश्वतः। परस्परेण छुरिते रूषितेऽमले छवी अन्योन्यकान्ती ययोस्तौ। छव्योरभीषूणामवयवावयविभावाद्भेदनिर्देशः। तौ हरिनारदौ तदैकवर्णाविव बभूवतुः। उभयप्रभामेलनादुभयोरपि सर्वाङ्गीणो गङ्गायमुनासंगम इव स्फटिकेन्द्रनीलमणिप्रभामेलनप्रायः कश्चिदेको वर्णः प्रादुर्बभूव तन्निमित्ता चेयमनयोरेकवर्णत्वोत्प्रेक्षा ॥

युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकासमासत।
तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसंभवा मुदः ॥ २३ ॥

युगान्तेति ॥ युगान्तकाले प्रतिसंहृतात्मनः आत्मन्युपसंहृता आत्मानो जीवा येन तस्य कैटभद्विषो हरेर्यस्यां तनौ जगन्ति सविकासं सविस्तरमासताऽतिष्ठन्। 'आस उपवेशने' लङ्। तत्र तनौ देहे तपोधनाभ्यागमेन संभवन्तीति संभवाः संभूताः। पचाद्यच्। मुदः संतोषा न ममुः। अतिरिच्यन्ते स्मेत्यर्थः। चतुर्दशभुवनभरणपर्याप्ते वपुषि अन्तर्न मान्तीति कविप्रौढोक्तिसिद्धातिशयेन स्वतःसिद्धस्याभेदेनाध्यवसितातिशयोक्तिः, सा च मुदामन्तःसंबन्धेऽप्यसंबन्धोक्त्या संबन्धासंबन्धरूपा ॥

निदाघधामानमिवाधिदीधितिं मुदा विकासं मुनिमभ्युपेयुषी।
विलोचने बिभ्रदधिश्रितश्रिणी स पुण्डरीकाक्ष इति स्फुटोऽभवत् ॥

. निदाघेति ॥ निदाघमुष्णं धाम किरणा यस्य तथोक्तम्। 'निदाघो ग्रीष्मकाले स्यादुष्णस्वेदाम्बुनोरपि' इति विश्वः। अर्कमिवाधिदीधितिमधिकतेजसं मुनिमभिलक्ष्य। 'अभिरभागे' इति लक्षणे कर्मप्रवचनीयसंज्ञा 'कर्मप्रवचनीययुक्ते द्वितीया'। मुदा विकासमुपेयुषी उपगते। क्वसुप्रत्ययान्तो निपातः। अतएवाधिश्रिता प्राप्ता श्रीर्याभ्यां ते तथोक्ते। 'इकोऽचि विभक्तौ' इति नुमागमः। विलोचने बिभ्रत्। 'नाभ्यस्ताच्छतुः' इति नुमभावः। स हरिः पुण्डरीकाक्ष इत्येवं स्फुटोऽभवत्। सूर्यसंनिधाने श्रीविकासभावादक्ष्णां पुण्डरीकसाधर्म्यात्। पुण्डरीके इवाक्षिणी यस्येत्यवयवार्थलाभे पुण्डरीकाक्ष इति व्यक्तम्। अन्वर्थसंज्ञो-

ऽभूदित्यर्थः । बिम्बस्फुटोऽभवदिति पदार्थहेतुकस्य काव्यलिङ्गस्य निदाघधामान-मिवेत्युपमासापेक्षत्वादनयोरङ्गाङ्गिभावेन संकरः ॥

सितं सितिम्ना सुतरां मुनेर्वपुर्विसारिभिः सौधमिवाथ लम्भयन् ।
द्विजावलिव्याजनिशाकरांशुभिः शुचिस्मितां वाचमवोचदच्युतः २५

सितमिति ॥ अथोभयोरुपवेशनानन्तरमच्युतो हेतुकर्ता । विसारिभिर-भीक्ष्णं प्रसरद्भिः । 'बहुलमाभीक्ष्ण्ये' इति णिनिः । द्विजावलिर्दन्तपङ्क्तिः । 'दन्तवि-प्राण्डजा द्विजाः' इत्यमरः । सैव व्याजः कपटं यस्य सः । तद्रूप इत्यर्थः । स चासौ निशाकरश्च तस्यांशुभिः किरणैः सितं स्वभावशुभ्रं मुनेर्वपुः सौधं प्रासादमिव सुतरामत्यन्तम् । अव्ययाद्बह्वादाम्प्रत्ययः । सितिम्ना धावल्येन प्रयोज्यकर्त्री लम्भय-न्व्यापारयन् । अतिधवलयन्नित्यर्थः । लभेरत्र गत्युपसर्जनप्राप्त्यर्थत्वेनागत्यर्थत्वात् 'गतिबुद्धि-' इत्यादिना अणि कर्तुर्न कर्मत्वम् । तथाह वामनः—'लभेर्गत्यर्थत्वा-ण्णिच्यणौ कर्तुः कर्मत्वाकर्मत्वे' इति । प्राप्त्युपसर्जनगत्यर्थत्वे तु कर्मत्वमेवेति रह-स्यम् 'लभेश्च' इति नुमागमः । शुचिस्मितां वाचमवोचदुक्तवान् । ब्रुवो वच्या-देशः लुङ् 'वच उम्' इत्युमागमे गुणः । अत्र सौधमिवेत्युपमायाः सितिम्ना लम्भयन्नित्यसंबन्धरूपातिशयोक्तेः द्विजावलिव्याजनिशाकरेति छलादिशब्दैरस-त्यत्वप्रतिपादनरूपापह्नवस्य च मिथो नैरपेक्ष्यात्संसृष्टिः ॥

हरत्यघं संप्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः ।
शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम् २६

हरतीति ॥ भवदीयदर्शनं शरीरभाजम् । द्रष्टॄणामित्यर्थः । 'भजो ण्विः' । कालत्रितये भूतादिकालत्रितयेऽपि योग्यतां पवित्रतां व्यनक्ति गमयति । कुतः— संप्रति दर्शनकाले अघं पापं हरति । एष्यतो भाविनः शुभस्य श्रेयसो हेतुः । तथा पूर्वाचरितैः प्रागनुष्ठितैः शुभैः सुकृतैः कृतम् । एवं त्रैकाल्येऽपि कार्यत्वेन कारणत्वेन च पुंसि सुकृतसमवायमवगमयते । अत एतादृशं दर्शनं कस्य न प्रार्थ्यमिति भावः । अत्र हरतीत्यादिवाक्यत्रयस्यार्थस्य शरीरेत्यादिवाक्यत्रयोक्त्या वाक्यार्थहेतुकं काव्यलिङ्गमलंकारः ॥

जगत्यपर्याप्तसहस्रभानुना न यन्नियन्तुं समभावि भानुना ।
प्रसह्य तेजोभिरसंख्यतां गतैरदस्त्वया नुन्नमनुत्तमं तमः ॥ २७ ॥

जगतीति ॥ जगत्यपर्याप्ता अपरिच्छिन्नाः सहस्रं भानवोंऽशवो यस्य तेन भानुनार्केण । 'भानवोऽर्कहरांशवः' इति वैजयन्ती । यत्तमो नियन्तुं निवार-यितुं न समभावि न शेके । भावे लुङ् । अविद्यमानमुत्तमं यस्मात्तदनुत्तमं सर्वा-धिकमदस्तमो मोहात्मकमसंख्यतां गतैस्तेजोभिः प्रसह्य बलात्त्वया नुन्नं छिन्नम् । अतः श्लाघ्यदर्शनो भवानिति भावः । 'नुदविद-' इत्यादिना विकल्पान्निष्ठान-त्वाभावः । अत्रोपमानाद्भानोर्मुनेराधिक्यप्रतिपादनाद्व्यतिरेकालंकारः ॥

कृतः प्रजाक्षेमकृता प्रजासृजा सुपात्रनिक्षेपनिराकुलात्मना ।
सदोपयोगेऽपि गुरुस्त्वमक्षयो निधिः श्रुतीनां धनसंपदामिव २८

कृतइति ॥ प्रजानां जनानामपत्यानां च क्षेमकृता कुशलकारिणा । 'प्रजा स्यात्संततौ जने' इत्यमरः । सुपात्रे योग्यपुरुषे कटाहादिदृढभाजने च निक्षेपेण निधानेन च निराकुलात्मना स्वस्थचित्तेन । 'योग्यभाजनयोः पात्रम्' इत्यमरः । प्रजासृजा ब्रह्मणा पुत्रिणा च त्वं धनसंपदामिव श्रुतीनां वेदानां सदोपयोगे दानभोगाभ्यां व्ययेऽप्यक्षयः । एकत्राम्नानादन्यत्रानन्त्याच्चेति भावः । गुरुरुपदेष्टा । संप्रदायप्रवर्तक इति यावत् । अन्यत्र महान् । निधीयत इति निधिः निक्षेपः कृतः । 'उपसर्गे घोः किः' । श्रुतिसंप्रदायद्वारा धर्माधर्मव्यवस्थापकतया जगत्प्रतिष्ठाहेतूनां भवादृशां दर्शनं कस्य न श्लाघ्यमिति भावः । अत्र शब्दमात्रसाधर्म्याच्छ्लेषोऽयं प्रकृतविषय इत्याहुः ॥

विलोकनेनैव तवामुना मुने कृतः कृतार्थोऽस्मि निवर्हितांहसा ।
तथापि शुश्रूषुरहं गरीयसीर्गिरोऽथवा श्रेयसि केन तृप्यते ॥२९॥

विलोकनेनेति ॥ हे मुने, निवर्हितांहसापहृतपाप्मना अतएवामुना तव विलोकनेनैव कृतार्थः कृतोऽस्मि । तथाप्यहं गरीयसीरर्थवत्तराः । 'द्विवचन–' इत्यादिना ईयसुन्प्रत्ययः । 'उगितश्च' इति ङीप् । 'प्रियस्थिर–' इत्यादिना गुरोर्गरादेशः । गिरस्तव वाचोऽपि शुश्रूषुः श्रोतुमिच्छुरस्मि । शृणोतेः सन्नन्तादुप्रत्ययः । न चैतत्तथेत्याह—अथवा । तथाहीत्यर्थः । अथवेति पक्षान्तरप्रसिद्धोरिति गणव्याख्यानात् । श्रेयसि विषये केन तृप्यते । न केनापीत्यर्थः । कृतार्थताया इयत्ताभावादिति भावः । भावे लिट् ॥

गतस्पृहोऽप्यागमनप्रयोजनं वदेति वक्तुं व्यवसीयते यया ।
तनोति नस्तामुदितात्मगौरवो गुरुस्तवैवागम एष धृष्टताम् ॥३०॥

गतस्पृहोऽपीति ॥ गतस्पृहो विरक्तोऽपि त्वमागमनप्रयोजनं वदेति वक्तुं यया धृष्टतया व्यवसीयत उद्यम्यते । स्यतेर्भावे लट् । उदितमुत्पन्नमुक्तं वा आत्मनो मम गौरवं येन स गुरुः श्लाघ्य एष तवागम आगमनमेव नोऽस्माकं धृष्टतां तनोति विस्तारयति । 'तनु विस्तारे' लट् । भवतो निस्पृहत्वेऽपि प्रेक्षावत्प्रवृत्तेः प्रयोजनव्याप्त्या सावकाशः प्रश्न इति भावः ॥

इति ब्रुवन्तं तमुवाच स व्रती न वाच्यमित्थं पुरुषोत्तम त्वया ।
त्वमेव साक्षात्करणीय इत्यतः किमस्ति कार्यं गुरु योगिनामपि ३१

इति ब्रुवन्तमिति ॥ इति ब्रुवन्तं तं हरिं स व्रती मुनिरुवाच । किमिति । हे पुरुषोत्तम पुरुषेषु श्रेष्ठ । 'न निर्धारणे' इति षष्ठीसमासप्रतिषेधः । त्वया इत्थं 'गतस्पृहोऽपि' इति न वाच्यम् । निस्पृहस्याप्यत्र प्रयोजनसंभवादिति भावः । तदेवाह । योगिनामपि त्वमेव साक्षात्करणीयः प्रत्यक्षीकर्तव्य इत्यतोऽस्मादन्यद्गुरु कार्यं किमस्ति । न किंचिदित्यर्थः । तस्मान्न प्रयोजनान्तरप्रश्नावकाश इति भावः ॥

यदुक्तं योगिनामपि त्वमेव साक्षात्करणीय इति तदेव द्रढयति—

उदीर्णरागप्रतिरोधकं जनैरभीक्ष्णमक्षुण्णतयातिदुर्गमम् ।
उपेयुषो मोक्षपथं मनस्विनस्त्वमग्रभूमिर्निरपायसंश्रया ॥ ३२ ॥

उदीर्णरागेति ॥ उदीर्ण उद्रिक्तो रागो विषयाभिलाषः स एव प्रतिरोधकः प्रतिबन्धकः पाटच्चरश्च यस्मिन् । 'प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः' इत्यमरः । अभीक्ष्णमक्षुण्णतयानभ्यस्तत्वेनाप्रतिहतत्वेन च जनैरतिदुर्गमं मोक्षपथमपवर्गमार्गं, कान्तारं चोपेयुषः प्राप्तवतः । 'उपेयिवान्–' इत्यादिना क्वस्वन्तो निपातः । मनस्विनः सुमनसः, धीरस्य च । प्रशंसायां विनिः । त्वमेव निरपायः पुनरावृत्तिरहितः संश्रयः प्राप्तिर्यस्याः सा तथोक्ता । 'न स पुनरावर्तते' इति श्रुतेः । अग्रभूमिः प्राप्यस्थानम् । 'अग्रमालम्बने प्राप्ये' इति विश्वः । 'सोऽहम्' इत्यादिश्रुतेस्तत्प्राप्तेरेव मोक्षत्वादिति भावः । तस्मान्मुमुक्षूणामपि त्वमेव साक्षात्करणीय इति सिद्धम् । 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति श्रुतेः । यथा कस्यचित्कुतश्चित्संकटान्निर्गतस्य केनचित्कान्तारेण गतस्य किंचिन्निर्बाधस्थानप्राप्तिरभयाय कल्पते तथा त्वमपि मुमुक्षोरिति ध्वनिः ॥

ननु प्रकृतिविविक्तपुरुषसाक्षात्कारान्मोक्षो नास्मत्साक्षात्कारादित्याशङ्क्य सोऽपि त्वमेवेत्याह—

उदासितारं निगृहीतमानसैर्गृहीतमध्यात्मदृशा कथंचन ।
बहिर्विकारं प्रकृतेः पृथग्विदुः पुरातनं त्वां पुरुषं पुराविदः ॥३३॥

उदासितारमिति ॥ पुराविदः पूर्वज्ञाः कपिलादयस्त्वां निगृहीतमानसैरन्तर्निबद्धचित्तैर्योगिभिः । आत्मनि इत्यध्यात्मम् । विभक्त्यर्थेऽव्ययीभावः । 'अनश्च' इति समासान्तष्टच् । अध्यात्मं या दृक् ज्ञानं तयाध्यात्मदृशा प्रत्यग्दृष्ट्या कथंचन गृहीतं साक्षात्कृतम् । केन रूपेण गृहीतमित्यत आह—उदासितारमुदासीनम् । प्रकृतौ स्वार्थप्रवृत्तायामपि स्वयमप्राकृतत्वादस्पृष्टमित्यर्थः । आस्तेस्तृच् । विकारेभ्यो बहिः बहिर्विकारम् । महदादिभ्यः पृथग्भूतमित्यर्थः । 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः । किंच प्रकृतेस्त्रैगुण्यात्मनो मूलकारणात्पृथग्भिन्नम् । 'प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणे' इति यादवः । पुरा भवं पुरातनमनादिम् । 'सायंचिरम्–' इत्यादिना ट्युप्रत्ययः । पुरुषं पुरुषपदवाच्यं विज्ञानघनं विदुर्विदन्ति । 'विदो लटो वा' इति झेरुसादेशः । यथाहुः–'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥' इति । 'अजामेकां लोहितशुक्लकृष्णाम्' इत्यादिश्रुतिश्च । सोऽपि त्वमेव 'तत्त्वमसि' इत्यादिवाक्यैरैक्यश्रवणात् । तस्मात्त्वमेव साक्षात्करणीय इति सुष्ठूक्तमिति भावः ॥

एवं भगवतो निर्गुणस्वरूपमुक्त्वा संप्रति प्रस्तुतोपयोगितया सगुणमाश्रित्य षड्भिः स्तौति—

**निवेशयामासिथ हेलयोद्धृतं फणाभृतां छादनमेकमोकसः ।**
**जगत्त्रयैकस्थपतिस्त्वमुच्चकैरहीश्वरस्तम्भशिरःसु भूतलम् ॥ ३४ ॥**

**निवेशयामासिथेति** ॥ जगत्त्रयस्यैकस्थपतिरेकाधिपतिरेकशिल्पी च । 'स्थपतिरधिपतौ तक्ष्णि बृहस्पतिसचिवयोः' इति वैजयन्ती । त्वं हेलयोद्धृतम् । वराहावतारे इति भावः । फणाभृतामोकस आश्रयस्य, सद्मनश्च । 'ओकः सद्मनि चाश्रये' इति विश्वः । एकं छादनमावरणं भूतलमुच्चकैरुन्नतेषु च अहीश्वरः शेष एव स्तम्भस्तस्य शिरःसु मूर्धसु, अग्रेषु च । फणासहस्रेष्विति भावः । निवेशयामासिथ निवेशितवानसि । विशतेर्ण्यन्ताल्लिटि थल् । 'कृञ्चानुप्रयुज्यते लिटि' इत्यस्तेरनुप्रयोगः । अत्र श्लिष्टाश्लिष्टरूपकयोर्हेतुहेतुमद्भावाच्छ्लिष्टं परम्परितरूपकम् ॥

**अनन्यगुर्वास्तव केन केवलः पुराणमूर्तेर्महिमावगम्यते ।**
**मनुष्यजन्मापि सुरासुरान्गुणैर्भवान्भवच्छेदकरैः करोत्यधः ॥ ३५ ॥**

**अनन्येति** ॥ न विद्यतेऽन्यो गुरुर्यस्यास्तस्या अनन्यगुर्वाः इत्यनीकारान्तः पाठः । समासात्प्राक्ङीषि 'नद्यृतश्च' इति कप्प्रसङ्गः स्यात् । पश्चात्त्वनुपसर्जनाधिकारात् 'वोतो गुणवचनात्' इति प्राप्नोति । 'ङिति ह्रस्वश्च' इति वा नदीसंज्ञात्वात् 'आण्नद्याः' इत्याडागमः । केचित्तु समासान्तविधिरनित्य इति कपं वारयन्ति । तस्याः सर्वोत्तमायास्तव पुराणमूर्तेरमानुषस्वरूपस्य । केवलः कृत्स्नः । 'केवलः कृत्स्न एकः स्यात्केवलश्चावधारणे' इति विश्वः । महिमा केनावगम्यते । न केनापीत्यर्थः । कुतः । मनुष्याजन्म यस्य स मनुष्यजन्मा भवान् । 'अवर्ज्यो हि बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः' इति वामनः । भवच्छेदकरैः संसारनिवर्तकैर्गुणैर्ज्ञानादिभिः सुरासुरान् । सुरासुरविरोधस्य कार्योपाधिकत्वेनाशाश्वतिकत्वात् 'येषां च विरोधः शाश्वतिकः' इति न द्वन्द्वैकवद्भाव इत्याहुः । अधः करोति । 'शेषे प्रथमः' इति प्रथमपुरुषः । भवच्छब्दस्य युष्मदस्मदन्यत्वेन शेषत्वादिति । मानुष एव ते महिमा दुरवगाहः । अमानुषस्तु किमिति तात्पर्यार्थः । द्वितीयार्थेऽसकृद्व्यञ्जनावृत्त्या छेकानुप्रासः ॥

**लघूकरिष्यन्नतिभारभङ्गुरामभूं किल त्वं त्रिदिवादवातरः ।**
**उदूढलोकत्रितयेन सांप्रतं गुरुर्धरित्री क्रियतेतरां त्वया ॥ ३६ ॥**

**लघूकरिष्यन्निति** ॥ त्वमतिभारेणोर्जेन स्वरूपेण भङ्गुरां स्वयं भज्यमानाम् । 'भञ्जभासमिदो घुरच्' । 'भङ्गुरः कर्मकर्तरि' इति वामनः । अमूम् । भुवमित्यर्थः । लघूकरिष्यन्निर्भारां करिष्यन् किल । 'कृभ्वस्ति–' इत्यादिनाऽभूततद्भावे च्विः । 'च्वौ च' इति दीर्घः । तृतीया द्यौस्त्रिदिवः स्वर्गस्तस्मात् । 'घजर्थे कविधानम्' ।

---

१ 'अनन्यगुर्व्याः' इति पाठः. २ 'भवोच्छेद' इति पाठः.

